विज्ञानतामविज्ञातामिति विरुद्धं प्रतिभाति, तथापि तद्ब्रह्म कथं कस्यचित्सम्विदितं स्यादिति जिज्ञासायामाह—

विशेषरूप से जानने वाले को ब्रह्म अविज्ञात रहता है, यह कथन यद्यपि अर्थज्ञ को विरुद्ध प्रतीत होता है, तथापि वह ब्रह्म किसी को सम्विदित = ज्ञात कैसे होगा, ऐसी जिज्ञासा होने पर कहा जाता है कि—

**प्रतिबोधं विदितं मतममृतत्त्वं हि विन्दते।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥**

"बोधं बोधं प्रति=प्रतिबोधम्" इतिविग्रहेऽत्राऽव्ययीभावसमासो वीप्सार्थे वर्तते, तथा च प्रतिबोधं विदितम्=सर्वं बोधं=बुद्धिवृत्यात्मकं ज्ञानं व्याप्य विदितं वृत्तिसाक्षित्वेन ज्ञातं वृत्तीनां सर्वासां प्रकाशकत्वेन-नित्यमनुभूतं स्वयं प्रकाशं ब्रह्म मतं सम्विदितं भवति, सर्वप्रत्ययान्त-रात्मतया प्रत्ययसाक्षित्वेन विदितं मतं ब्रह्म तत् सम्यङ्मतं ज्ञातं भवति, इत्थं विदुषामाचार्याणां मतमपि वर्तते। हि-यत उक्तरीत्या ब्रह्म सम्यग् ज्ञातं भवति, तत् एव तस्य ब्रह्मणो ज्ञानान्मुमुक्षुरमृतत्वं मोक्षं विन्दते= लभते। अमृतत्वप्राप्तौक्रममाह=प्रथमं योगयुक्तादिभिः समाहितेनाऽऽत्मना मनसा, स्वात्मनिष्ठया ध्यानेन वा वीर्यं=अविद्यामोहादिपराभवसामर्थ्यं पूर्णविवेकवैराग्यादि विन्दते प्राप्नोति, ततः सच्छास्त्रगुरूपदेशतः, उक्त हेयोपादेय कार्यकारणविलक्षणस्य ब्रह्मात्मनो विद्यामपरोक्षामनुभवं प्राप्नोति। यतो "नाऽयमात्मा बलहीनेन लभ्यः" अतः प्रथमं बलं प्राप्य पुनर्विद्यामाप्नोति, तया विद्यया ब्रह्मात्मज्ञानेनाऽमृतम्मोक्षं विन्दते, अविद्याया अपसारणेन नित्यमुक्तमात्मानं व्यक्तं करोतीति यावत् ॥४॥

बोधं बोधं प्रति = बोधं ब्रह्म विदित मतम्। घट पदादि के बुद्धि = मनो वृत्तिरूप सभी बोधों ज्ञानों में ब्रह्म विदित = ज्ञात = चिदाभासरूप से व्यक्त होता है, और इसी प्रकार से चिदाभासरूप से ब्रह्म ही मत = अनुभूत = ज्ञात होकर, जीव स्वरूप ब्रह्म अमृतत्व ।।मोक्ष पाता है. और मर्त = होने के लिये प्रथम सत्कर्म भक्ति आदि से विशुद्ध आत्मा = मन से पूर्ण विवेक वैराग्यशमद-मादि रूप वीर्य = बल को जो प्राप्त करता है, उसके बाद ब्रह्मात्मा के अपरोक्षा-नुभव से मत=अनुभूत होकर अमृत=मोक्ष को प्राप्त करता है, अर्थात् चिदा-

भासता को प्राप्त ब्रह्म विद्या से उपाधि को बाधित करके पूर्ण नित्य मुक्त चिद्रूप से स्थिर होता है, जैसे दर्पण के अभाव होने पर प्रतिबिम्ब विम्बरूप से स्थिर होता है, इत्यादि, "मुखाभासको दर्पणे ... " दृश्यमानो मुखत्वात्पृथक-त्वेन नैवास्ति-वस्तु । चिदाभासकोधीषु जीवोऽपि तद्वत् स नित्योपलब्धिस्वरूपो-ऽहमात्मा ॥ १ ॥ यथादर्पणा भाव आभास हानौ मुखं विद्यते कल्पना हीन-मेकम् । तथा धीवियोगे निराभासकोयःस नित्योपलब्धिस्वरूपोऽहमत्मा ॥ २॥

दर्पण में दीखता हुआ मुख का आभासमुख होने के कारण मुख से पृथक् स्वतन्त्र कोइ वस्तु नहीं रहता है, बुद्धि में चिदाभासरूप जीव भी इसी प्रकार-चिदात्मा से भिन्न स्वन्त्र वस्तु नहीं है चिन्मात्र ही सत्य वस्तु है, वह चिन्मात्र नित्यज्ञान स्वरूप आत्मा मै हूँ ॥ १ ॥ जैसे दर्पण के अभाव होने पर अभास की निवृत्ति से भेद की कल्पना से रहित एक ही मुख रहता है, तैसे बुद्धि के वियोग = अभाव होनेपर, जो अभास रहित एक आत्मा रहता है, सो नित्य ज्ञान स्वरूप मैं हूँ ॥ २ ॥ "अभास एव च। ब्रह्मसूत्र अ० २।३।५०" जीवों के व्यावहारिक स्वरूप चिदाभास ही है, सत्यस्वरूप एक ब्रह्म हैं, सो असङ्ग चिन्मात्र विभु है, परन्तु व्यावहारिक स्वरूप के पृथक पृथक् होने से कर्मादि के संकर नहीं होते है. बन्धमोक्षादि की भी व्यवस्था हो जाती है, इत्यादि विस्तारपूर्वक वही ज्ञातव्य है ॥ ४ ॥

आलस्य मोह प्रमादरागद्वेषकुसङ्गादित्यागेनाऽऽध्यात्मिक बलं प्राप्या-ऽत्रैव मानवे लोके ज्ञानाधिकारवति मानवे शरीरेऽमृतार्थिका विद्याऽवश्यं प्राप्तव्याऽस्ति प्रमादादिभिर्विद्याया अप्राप्तौ महाकष्टा संसारगति भवतीति परमकारुण्यवतीव श्रुतिराह—

आलस्य मोहप्रमादरागद्वेष कुसङ्गादि के त्यागपूर्वक पूर्णविवेक विरागादि बल को प्राप्त करके इस मानव लोक में तथा ज्ञानाधिकार युक्त मानव शरीर में ही मोक्षार्थक विद्या की प्राप्ति अवश्य करना चाहिये, नहीं तो प्रमादि से विद्या की अप्राप्ति अवस्था में महा कष्ट प्रद सांसारिक गति की प्राप्ति होती है, परम कारुणिकी तुल्य परमहितैषिणी श्रुति यह कहती है कि—

**इह चेदवेदीदथ सत्यमस्ति, न चेदिहाऽवेदीन्महती विनष्टिः ।**
**भूतेषु भूतेषु विचित्य धीराः प्रेत्याऽस्माल्लोकाद मृता भवन्ति ॥५॥**

इति केनोपनिषद् द्वितीयः खण्डः ॥

इह मानवे लोके ज्ञानाधिकारादियुक्ते मानवे शरीरे, चेद्-यदि =उक्तरीत्या कार्यकारणविलक्षणं यः कोऽपि=अवेदीत्=विदितवान्=अहं ब्रह्माऽस्मीति, अनुभूतवान्। अथ तदा, तादृशानुभव काल एवाऽविद्या निवृत्या, तदनुभवानन्तरमेव सत्यममृतं नित्यमुक्तात्मस्वरूपमस्ति = अमृतं प्राप्तं भवति, मानवाऽवतारं च सफलं भवति, इह लोके जन्मादि च। चेन्नावेदीत् = न विदितवान्, तदा महती-दीर्घकालिकी = अनन्ता विनष्टिः, जन्ममरणादिलक्षणा कष्टाऽऽत्मिका संसृति र्भवति। अतो ज्ञानाऽज्ञानयो र्गुणदोषज्ञानवन्तो धीराः=विवेकिनो विद्वांसो भूतेषु भूतेषु चराचरेषु सर्वेषु प्राणिषु वर्तमानं ब्रह्मात्मभूतं सर्वात्मानं ब्रह्म विचित्य=विज्ञाय सर्वात्मत्वेन साक्षात्कृत्य, भूतत्वधर्मादिरहितं नित्यमुक्तमात्मानमनुभूय, अस्माच्छरीरादिलक्षणाल्लोकादविद्याऽऽत्मिकाज्जीवन्नेव, प्रेत्य=अभिमानादि त्यागेन सर्वस्माल्लोकात्पृथक् भूत्वा, लोकेभ्योऽत्युपरतास्तेऽमृताः=जीवन्मुक्ताः ब्रह्मस्वरूपा भवन्ति= "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति। मुण्डक इति" ॥५॥

इह = इसलोक तथा शरीर में चेत् = यदि कोई = कार्यकारणादि से अन्य नित्यमुक्त शुद्ध ब्रह्म को 'अवेदीत' समझा = अपरोक्ष अनुभव किया कि "अहं ब्रह्मास्मि" मैं शुद्धब्रह्म हूँ। अर्थात् मेरासत्यस्वरूप ब्रह्म है, देहेन्द्रियादि नहीं। अथ=उस ज्ञान से अविद्या की निवृत्ति के अनन्तर = बाद में उस समझने वाले का सत्य नित्यमुक्त स्वरूपही है, वह जीवन्मुक्त ही है, अतः नष्ट नहीं होता है। यदि इस लोक और शरीर में 'अवेदीत' नहीं जाना = सत्यात्मा को विभु ब्रह्म स्वरूप नहीं समझा तो देहादि के अभिमानी होने के कारण उस अज्ञ की महती विनष्टि = जन्ममरणादिरूप महान् विनाश होता है, मानवजन्मादि निष्फल जाता है। अतः ज्ञानाऽज्ञान के गुण दोष को जानने वाले धीर = सत्यधारणाधैर्ययुक्तविद्वान्, भूतेषु भूतेषु, सबचराचर प्राणियों में चिदाभासरूप को भी वस्तुतः ब्रह्मस्वपरू एकात्मा 'विचित्य, विचार्य = अनुभूयच' विचार कर अनुभव करके = अन्वेषण करके, फिर इस मायामय शरीरादिरूप लोक से जीवन काल में ही प्रेत्य = पृथक्–असङ्ग होकर, अभिमान के त्यागद्वारा शरीरादि से भिन्न उपरत होकर "अमृता भवन्ति" जीवन्मुक्ति ब्रह्मस्वरूप हो जाते है "स यो ह चैतत्परमं ब्रह्मवेद ब्रह्मैव भवति" मुण्डक० ३।२।९।

यः = जो कोई पूर्वोक्त पर ब्रह्म को वेद = साक्षात् आत्मस्वरूपजानता है,

स = वह ब्रह्मस्वरूप मुक्त हो जाता है, अतः उनके मोक्ष में कोई विघ्न बाधा भी नहीं होता है ॥ ५ ॥

●

# अथ केनोपनिषद् तृतीयखण्डः

विवेकादियुक्तगलिताऽभिमानवदुत्तमाधिकारिभिर्गम्या विद्योक्ता, सम्प्रति मन्दमध्यमाधिकारिगम्या विद्योच्यते, आख्यायिका सुख प्रतिपत्यर्था ज्ञेया, किञ्च दुर्ज्ञेयब्रह्मज्ञानायाऽधिक यत्न विधानार्था च, अभिमानादि त्यागेन शमादिः सम्पादयितव्यो मुमक्षुभिरित्ययमप्यर्थो लक्ष्यते ह्याख्यायिकया। तथा "नेदं यदिमुपासते" इत्यनेन यद् ब्रह्मण उपासनं निषिद्धमिव प्रत्युक्तम्, तत्सगुणब्रह्मणः कर्तव्यत्वेन प्रतिपादयन्नाह—

विवेकादियुक्त अभिमानादिरहित उत्तम ज्ञानाधिकारियों से प्राप्त करने-योग्यविद्या की कथा प्रथम कही गई है, अब मन्द मध्यम अधिकारियों से प्राप्त करने योग्य विद्या की वार्ता कही जायगी "आख्यायिका" ब्रह्मेन्द्रादि का सम्बाद, सुख से अर्थ ज्ञानार्थक है. और दुर्ज्ञेय ब्रह्मज्ञान के लिये अधिकप्रयत्न की विधि के लिये भी आख्यायिका है, क्यों कि अभिमानादि के त्यागपूर्वक शमदमादि की प्राप्ति मुमुक्षुको करना चाहिये, यह अर्थ भी आख्यायिका से लक्षित = बोधित = ज्ञात होता है। और "नेदं यदिदमुपासते" इस कथन से जो ब्रह्म की उपासना निषिद्ध के सामान = प्रत्युत खण्डित हुई है उस सगुण ब्रह्म की उपासना को कर्तव्य रूप से प्रतिपादन करती हुई श्रुति कहती है कि—

**ब्रह्म ह देवेभ्यो विजिग्येऽस्य ह ब्रह्मणो विजये देवा अमहीयन्त।**
**त ऐक्षन्ताऽस्माकमेवाऽयं विजयोऽस्माकमेवाऽयं महिमेति ॥१॥**

ब्रह्म ह = पूर्वोक्तं सर्वात्मत्वेन प्रसिद्धं सच्चिदानन्दस्ववरूपमेव ब्रह्म मायाशक्तिमत्वसर्वज्ञत्वयुक्तं सत्, देवेभ्यो देवानां हितार्थाय ह, खलु = देवादि सर्वलोकाऽहितान् क्रूरानसुरान् विजिग्ये। देवेषु सदैवान्तर्यामिरूपेण वर्तमानं ब्रह्म पुरा देवासुर संग्रामे देव द्वारैवासुरान् विजिग्ये, विजितवानसुरान् अन्तर्यामिरूपेण वर्तमानस्य सर्वज्ञस्य सर्वशक्तस्य तस्य

ब्रह्मणो विजये सति, देवा = इन्द्राग्निवायुप्रभृतयोऽमहीयन्तः लोकैः पूजिता अभवन् पूजां प्राप्तवन्तः। ततस्तेवा अन्तर्यामिस्वरूपस्य सर्वात्मनो ब्रह्मणो ज्ञानाऽभावादेव देहादावात्मभिमानवन्तो भूत्वा = ऐक्षन्त = अपश्यन्त विचारितवन्तः, यदस्माकमेव व्यष्टिदेवानामेवाऽयमनुपलब्धो विजयोऽस्ति। अस्मत्प्रभावादेवाऽसुराःपराभूताः। अतोऽस्माकमेवाऽयं महिमा = महत्वं विद्यते नान्यो मत्तो बली पूज्य ईश्वरोवाऽस्ति। अहो मोहमहिमा देवा अपि सत्यसर्वात्मज्ञानं विना यावत्प्रारब्धं विपरीत ज्ञानाऽज्ञानाभ्यां संसारे-भ्रमन्ति भीताश्च भवन्ति, तदावऽन्येषां भ्रमणादौ किं वक्तव्यमस्ति, ततो भेदभ्रमादिनिवृत्तये यथाशक्ति सर्वैरेव यत्नः कर्तव्य इतिश्रुते-राशयः ॥१॥

प्रथम कभी देवासुर संग्राम में पूर्ववर्णित ब्रह्म ही सर्वात्मारूप से प्रसिद्ध ब्रह्म ही क्रूर असुरों को 'देवेभ्यो' देवों के हित के लिये विजिग्ये, = जीता, अर्थात् अन्तर्यामी ब्रह्म देवोंपर अनुग्रह करके उन्हे शक्ति दिया, फिरदेवद्वारा असुरों का पराभव संहार किया, फिर, अस्य, इस ब्रह्म के विजय होने पर, इद्रादिदेव महीयन्त, महत्व पाये पूज्य हुए, फिर, ते, वे देव ब्रह्म के अज्ञान से, (ऐक्षन्त) इक्षता विचार करने लगे, समझे कि यह विजय, अस्माकं, हमारा ही है, हमारे तेज बल के प्रभाव से असुर पराजित हुए हैं, अतः हमारी महिमा "महत्व" है, हमसे अन्य कोई पूज्य या ईश्वर नहीं है इत्यादि ॥

श्रुति का तात्पर्य है कि मोह की महिमा आश्चर्यात्मक है कि जिससे सत्य-सर्वात्मा अन्तर्यामी ब्रह्म के ज्ञान के विना अनन्तशक्तियुक्त अधिकारी देव भी अपने प्रारब्ध पर्यन्त अज्ञानविपरीतज्ञान द्वारा अभिमानी होकर संसार में भ्रमते हैं, भयभीतादि होते हैं तो ब्रह्मज्ञानादि के विना अन्य के भ्रमणादि का क्या कहा जा सकता है, अतः अज्ञान विपरीतज्ञानमोह भ्रमादि की निवृति के लिये अपनी २ शक्ति के अनुसार सब को यत्न करना चाहिये आलस्यादि के वश नहीं होना चाहिये इत्यादि ॥१॥

करू विचार विकार परिहरु, तरण तारणो सोई।
कहहि कबिर भगवन्त भजु नर, द्वितिया और न कोई ॥ १ ॥

देवानामुक्ताभिमानवत्वेऽपि सात्विकत्वेनेश्वरानुग्रहपात्रत्वाद् असुर-पशुविशेषादिवत्सर्वथैवाऽनुग्रहपात्रत्वाऽभावाऽभावत्तेषां हितायेश्वरानुग्रहो वर्ण्यते श्रुत्येति—

देवों के उक्त अभिमानयुक्त होते भी सात्त्विक होने के कारण ईश्वरानुग्रह की पात्रता भी उनमें रहती है, असुर पशु आदि तुल्य सर्वथा अनुग्रहपात्रत्व के अभाव का अभाव रहता है। अतः उनके हितके लिये ईश्वरानुग्रह = कृपा का वर्णन श्रुति करती कि—

**तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव**
**तन्न व्यजानन्त किमिदं यक्षमिति ॥२॥**

तत्—सर्वान्तर्यामिस्वरूपं, ह एव, ब्रह्म, तद्, देवानामभिमानं मिथ्या-ज्ञानं विजज्ञौ विज्ञातवत्। ततो देवा असुरवन्मोहान्धकारे मा पततु, इति कृपयाऽऽलोच्य, तेभ्योऽनुग्रहाय ह-एव, न तु स्वार्थाय, पूर्णकामस्य सच्चिदात्मनः स्वार्थाऽभावात्। ब्रह्म देवानामपि देव पूज्य यक्ष=पूज्यस्वरूपेण प्रादुर्बभूव, तेषमनतिदूरे स्थाने=आकाश प्रदेशविशेषे स्वप्राकट्यं चकाराऽऽकाशस्याऽप्यन्तरात्मत्वात्तत्राप्यन्तर्यामित्वेन सदा वर्नमानत्वात्तत्प्राकट्यं सम्बभूव। किन्तु तत्प्रादुर्भूतं ब्रह्माऽभिमानिनो देवा अभिमानानां त्यागमन्तरा न व्यजानन्तः सम्मुखे प्रत्यक्षमपि न विज्ञातवन्तः, यत्किमिदं प्रत्यक्षोपस्थितं यक्षं पूज्यं वस्तु विद्यते—इति॥२॥

तत् ह, वह सर्वान्तर्यामीस्वरूप ब्रह्म ही = एषां, इन देवों के 'तत' उक्त अभिमान विपरीत मिथ्या ज्ञान को विजज्ञो, समझा = जान गया, तब विचार किया कि ये देव असुरादि के समान मोहान्धकार में न गिरें, अतः कृपाकर के 'तेभ्यो ह' उनके हित = अनुग्रह के ही लिये "प्रादुर्बभूव" उनके सामने कुछ दूर स्थान में पूज्य स्वरूप से ब्रह्म प्रगट हुआ, पूर्ण कामता आदि से स्वार्थ के लिये नहीं प्रगट हुआ, तथापि 'तत्' उस पूज्य प्रत्यक्ष ब्रह्म को भी अभिमानी देव, अभिमान के त्यागे बिना 'न व्यजानन्त' विशेषरूप से नहीं जान सके कि "किमिदं यक्षमिति" यह सामने उपस्थित यक्ष = पूज्य वस्तु कौन वस्तु है, इत्यादि ॥ २ ॥

**तेऽग्निमब्रुवन्=जातवेद एतद्विजानीहि किमिदं यक्षमिति तथेति ॥३॥**

उक्ताऽज्ञानाद्भयकौतुहलाद्याविष्टास्ते=इन्द्रादयो देवा अग्निम्=देवेष्वग्रगामिनं प्रस्तुवनब्रुवनुक्तवन्तः। हे जातवेदः=जातानिवेदांसि ज्ञानानि यस्मात्तत्सम्बोधने जातबोध, हे सर्वज्ञाऽग्ने त्वम्-एतत्प्रत्यक्षोपस्थितं विशेषेण विजानीहि, यत्किमात्मकमिदं यक्षमस्ति, एतदपि देवविशेषोऽस्ति वा सर्वदेवादिभ्यो विलक्षणं किमप्यस्ति अस्माकं मध्ये तेजस्वी त्वमेतज्ज्ञातुमर्हसि एवमुक्तोऽग्निः साऽभिमान एव तथाऽस्त्वित्युक्तवान्॥ ३ ॥

उक्त अज्ञान से भय कौतुहलादि युक्त 'ते' वे इन्द्रादि देव सब, सब देवों के अग्रगामी अग्निदेव की स्तुति करते हुए, अग्निदेव को 'अब्रुवन्, कहा कि हे जातवेद, जात = उत्पन्न हुए हैं वेदम् = ज्ञान जिससे, ऐसा तुम हे ! सर्वज्ञ अग्निदेव ! तुम 'एतद्विजानीहि' इस प्रत्यक्ष-उपस्थित पूज्य को विशेष रूप से समझो = जानो कि "किमिदं यक्षम्" यह यक्ष क्या है, यह भी कोई देव है या सब देव से विलक्षण कोई है। हम सब में आप देजस्वी हो, अतः आप इसको जान सकते हो, ऐसा कहने पर अभिमान सहित अग्निदेव बोले कि "तथाऽस्तु इति" आप सबके कथनानुसार मैं जाकर समझता = जानता हूँ कि कौन है ॥३॥

उक्तरीत्योक्त्वा च—

उक्तरीति से तथास्तु ऐसे कह कर—

**तदभ्यद्रवत्तमभ्यवदत् कोऽसीत्यग्निर्वाऽहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥४॥**

तत्=प्रत्यक्षं यक्षं प्रति=अभिअद्रवदग्निः, यक्षसन्निधौगतवान्। तथापि तद् यक्षं प्रष्टुं समर्थोनाऽभवेदग्निः, ततस्तुष्णीभूतं सन्निधावुपस्थित-

मग्निमेव तद्यक्षं ब्रह्माऽभ्यवदत् प्रत्यभाषत् पृष्टवान्-त्वं–कोऽसि किन्नामासि। एवं यक्षेण पृष्टोऽग्निरब्रवीदुक्तवान्–अहमग्निर्वै = अग्निनामतः प्रसिद्धोऽस्मि, तथा जातवेदा जातवेदोनामा वै प्रसिद्धोऽस्मि। उक्तनामद्वयेनात्मानं स्तुवन्नेवाग्निरुक्तवान् ॥४॥

तत् = उक्त यक्ष के प्रति = पास = समीप में 'अभि अद्रवत्' अग्निदेव शीघ्र तुरन्त गये, तो भी उस यक्ष से कुछ पूँछ नहीं सके, अर्थात् आप कौन हो इत्यादि प्रश्न नहीं कर सके, तब पास में चुप = मौन हो कर स्थिर उस अग्नि देव को ही वह यक्ष "अवदत्" पूछा कि आप 'कोऽसि' कौन हो, क्या नाम है ऐसा पूछने पर अग्नि देव बोले कि मैं अग्नि हूँ, अग्नि ही मेरा नाम है। तथा जातवेदानाम भी है। इन दोनों नामों द्वारा अपनी स्तुति करते हुए बोले ॥ ४ ॥

उक्तरीत्याग्निनोक्तेसति तमग्निं ब्रह्माऽपृच्छत्—

उक्त रीति से अग्नि के बोलने पर ब्रह्म पूछा कि—

## तस्मिँ्स्त्वयि किं वीर्यमित्यपीदँ सर्वं दहेय यदिदं पृथिव्यामिति ॥५॥

तस्मिन्=उक्त प्रसिद्धगुणनामवति त्वयि, तव स्वरूपेण किं वीर्यं किमात्मकं सामर्थ्यं विद्यते, एवं पृष्टोऽग्निरुक्तवान्, यत्पृथिव्यां यदिदं विद्यते तत्सर्वं दहेयमहं दग्धं कुर्याम्, इदमपि च पृथिव्यादिकं जगदनात्मभूतं लोकादिकं सर्वं दहेयमित्थं भूतं सामर्थ्यं मयि विद्यते ॥५॥

उक्त प्रसिद्ध गुण नाम वाले आप में "किं वीर्यम्" कौन सामर्थ्य= शक्ति है। ऐसा पूछने पर अग्निबोले कि "पृथिव्याम्" पृथ्वी पर "यदिदं" जो यह वस्तु है "तत्सर्वं दहेयं" उन सबको मैं दग्ध-नष्ट = भष्म कर दूँ, और "इदमपि" इस पृथिवी आदि स्वरूप सब जगत को भी भष्म कर दूँ। ऐसी शक्ति हममें है ॥ ५ ॥

उक्तरीत्या साऽभिमानमग्निदेवेनोक्ते सति, तदभिमानित्वादिलक्षणस्याज्ञानस्यनिवारणेनाऽमानित्वादिलक्षणस्य पुनश्चाऽऽसुरसम्प्रच्छातनपूर्वकाऽमानित्वलणक्षदैवीसम्पत्प्रापण द्वाराऽग्निदेवस्य श्रेयो विधातुं यक्षो देवः प्रयत्नं कृतवानिति सर्वहितैषिणी श्रुतिराह—

उक्त रीति से अभिमान सहित अग्नि देव के बोलने पर उनके अभिमानित्वादि रूप अज्ञान के निवारण द्वारा, आसुरी सम्पति के निवारण पूर्वक, पुनः अमानित्वादि रूप है दैवी सम्पति की प्राप्ति करने के द्वारा अग्नि देव के श्रेयः ( शुभ ) सिद्धि के लिये यक्षदेव नें प्रयत्न किया। इस अर्थ को सर्वहितैषिणी श्रुती कहती है कि—

**तस्मै तृणं निदधावेतद्दहेति, तदुपप्रेत्याय सर्वजवेन, तन्न शशाक दग्धुं, स तत एव निववृते, नैतदशकं विज्ञातुम्। यदेतद् यक्षमिति ॥६॥**

तस्मै=उक्तसर्वंदग्धृत्वाऽभिमानवतेऽग्निदेवाय, तृणं निदधौ, तत् समीपे तदग्रेशुष्कतृणं स्थापितवद् दत्तवद् यक्षात्मकं ब्रह्म, तदग्रे तृणं दत्वा—उक्तवच्च, यदेतन्मया तवाग्रे स्थापितं तृणं तत् त्वं दह, दग्धं कुरु—इति वचनमुवाच ब्रह्म। तथा यक्षेणोक्तोऽग्निस्तत् तृणं सर्वजवेन=सर्ववेगेन=उपप्रेयाय तृणसन्निधौ गत्वाऽपि तत् तृणं दग्धुं भस्मीकर्तुं न शशाक, शक्तः समर्थो न बभूवाग्निः, ततो गतगर्वः सन् ततस्तस्मात्स्थानात् तुष्णीमेव सोऽग्निर्निववृतेनिवृत्तोऽभूत। इन्द्रादिदेवानां सन्निधौ गत्वाच देवान् प्रत्युवाच, एतत् सम्मुखेऽस्माकमुपस्थितं यद् यक्षं वर्तते तदेतत् किं स्वरूपमिति विज्ञातुं विशेषतोऽवगन्तुं नाऽहमशम्—न शक्तोऽभूवमिति ॥६॥

उस यक्ष देव ने 'तस्मैं' उसक्षधृत्त्व के अभिमानी देव के प्रति दग्ध करने के लिए एक शुष्क तृण 'निदधौ' समीप में धर दिया, और उनसे कहा

कि इसको 'दह' दग्ध करो, तब अग्निदेव, सर्वजव = वेग से 'उपप्रेयाय' उस तृण के समीप जाकर भी "तन्न शशाक दग्धुं" उस तृण को दग्ध करने में समर्थ नहीं हुए। तब अभिमान रहित होकर 'ततएव' उस तृण स्थानसे सो अग्नि चुप होकर निवृत हुए, यक्ष देव से नहीं कुछ कह सके, किन्तु इन्द्रादि देव के समीप में जाकर बोले कि, जो यह सामने उपस्थित यक्ष हैं, एतद्-यह किम् = क्या है, इस अर्थ को मैं विशेषरूप से जानने में समर्थ नही हो सका हूँ ॥ ६ ॥

**अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद् यक्षमिति तथेति ॥७॥**

अथ=अग्नेरुक्तवचनश्रवणानन्तरं वायुं सर्वप्राणात्मकमग्नेरुत्तेजकमग्नेर्बलवन्तं ज्ञात्वा तं देवा अब्रुवन्नुक्तवन्तः, हे वायो! त्वमेतदुपस्थितं यक्षं विजानीहि, यदेतद् यक्षं देवादिषु मध्ये किमपि विद्यते तदन्यद् वा किञ्चिद् विद्यते। इति=एवमुक्तो वायुस्तथाऽस्तु-इत्यङ्गीचकार, यक्षं वेदितुं स्वीकृतवान् ॥७॥

अथ = अग्नि के बचन सुनने के बाद = अनन्तर, वायु को सर्वप्राणात्मक, अग्नि का उत्तेजक अग्नि से वली जानकर, वायु को देव सब कहे कि हे वायो! वायुदेव इस उपस्थित यक्ष को आप समझो कि यह यक्ष "किमस्ति" देवादि में क्या स्वरूप वाला है। ऐसा कहने पर वायु देव बोले कि तथास्तु = आप की आज्ञा का पालन करूँगा ॥ ७ ॥

**तदभ्यद्रवत्तमभ्यवदत्कोऽसीति, वायु र्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥८॥**

उक्त स्वीकृत्यनन्तरं वायुदेवस्तद्यक्षं प्रति अभ्यद्रवत्-तत्सम्मुखे तत्सन्निधौ प्रापत् गतवान्, ततस्तं स्वसमीपस्थं सन्निधौ प्राप्तं प्रश्ने-

ऽसमर्थं वायुं यक्षतेजसाऽभिभूतं तुष्णीं स्थितं—यक्षात्मकं ब्रह्मैवाऽभ्यवदत्—अपृच्छत् कोऽसीति, किं नामा किं प्रभावोसीति यक्षं ब्रह्म पृष्टवत्। ततो वायुर्यक्षं प्रत्यब्रवीत्—प्रत्युत्तरमुक्तवान्। अहं वै वायुर्वायुनामाऽस्मीति, अन्यच्च मम नाम मातरिश्वाऽस्ति। अतो मातरिश्वा= मातरिश्वनामा वै मातर्यन्तरिक्षे श्वयति गच्छतीति तथा नामाऽस्मीत्यब्रवीद् वायुः ॥८॥

तथास्तु इस उक्ति के बाद, वायुदेव तत् उस यक्ष के प्रति—अभिद्रवत्= यक्ष के समीप में प्राप्त हुए, परन्तु पूछने में असमर्थ उस वायु देव को यक्ष देव ने ही पूछा कि आप कौन हो ? आप का नाम क्या है. आप में क्या प्रभाव है, इत्यादि। तब वायु देव बोले कि वायु नाम वाला मैं हूँ, और 'मातरिश्वा' मातरि = अन्तरिक्ष में = श्वयति = चलै, सो मातरिश्वा कहा जाता है। अतः अन्तरिक्ष गामी मैं हूँ। इत्यादि ॥ ८ ॥

उक्तविधा वायुनोक्ते सति यक्षं ब्रह्माऽपृच्छत्—

उक्त रीति से वायु के कहने पर यक्ष—ब्रह्म पूछा कि—

**तस्मिँस्त्वयि किं वीर्यमित्यपीदँ सर्वमाददीयं यदिदं पृथिव्यामिति ॥९॥**

तस्मिनुक्तप्रसिद्ध नामवति त्वयि वायौ किं वीर्यं विद्यते, पृष्टोवायुरब्रवीत् पृथिव्यां यदिदं चराचरात्मकं विद्यते तत्सर्वमहमाददीयं, इदं च चराचराऽऽधारभूतं पृथिव्यादिकमप्याददीयं गृहीत्वा चान्तरिक्षे गन्तुं शक्नोमीति ॥९॥

तस्मिन् = उक्त नाम वाले तुम वायु में कौन वीर्य शक्ति है, ऐसा पूछने पर वायुदेव बोले कि पृथ्वी में "यदिदं" जो यह जड़-चेतन वस्तु है, उन सबको मैं "आददीयं" ग्रहण करूँ, और 'इदं' यह जो सब का आधार

स्वरूप पृथ्वी आदि हैं। उनको भी ग्रहण करूँ और ग्रहण करके अन्तरिक्ष में भ्रमण करूँ ऐसा मेरा वीर्य है ॥ ६ ॥

**तस्मै तृणं निदधावेतदादत्स्वेति, तदुपप्रेयाय सर्वजवेन,**
**तन्न शशाकाऽऽदातुं, स तत एव निववृते नैतदशकं**
**विज्ञातुं यदेतद् यक्षमिति ॥१०॥**

तस्मै=उक्तरीत्या स्वसामर्थ्यमुक्तवते वायवे तृणं निदधौ दत्तवान्, तत्समीपे निहितवद् धृतवद् ब्रह्म, उवाच च यदेतत्तृणमादत्स्व, गृहाणेति, एवमुक्तो वायुः सर्वजवेन तत्तृणमुपप्रेयाय, तृणसन्निधौ गतवान् तथापि तत्तृणमादातुं न शशाक=नाऽशकत्। ततः स वायुस्तस्मात्तृणस्थानादेव निववृते, यक्षं प्रति नागमदिति। निवृत्तः सन् देवान् प्रत्युक्तवान्, यदेतद् यक्षं तत्स्वरूपमेतद्विज्ञातुमहं नाऽशकमित्यादि पूर्ववत् ॥१०॥

तस्मै = उक्तरीति से स्वसामर्थ्य को कहने वाले वायु के प्रति 'तृणं निदधौ, तृण को अर्पण किया, वायु के पास में धर दिया, और कहा कि इस तृण को "आदत्स्व" आदान=ग्रहण करो, तब वायु देव, सब वेग से तृण के पास में गये। परन्तु उस को ग्रहण करने के लिये समर्थ नहीं हुए, तब, "स' वह वायु यक्ष के पास में नहीं गये, किन्तु उस तृण के स्थान से ही निवृत्त हुए, और निवृत्त हो कर देवों के प्रति कहा कि जो यह प्रत्यक्ष यक्ष हैं, उसको विशेषरूप से जानने के लिये मैं समर्थ नहीं हो सका ॥ १० ॥

**अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद् यक्षमिति,**
**तथेति तदभिद्रवत्तस्मात्तिरोदधे ॥११॥**

अथ वायुनास्वाशक्तिप्रदर्शने कृते तदनन्तरमिन्द्रं देवपतिमतिबलवन्तं ज्ञात्वा देवास्तमिद्रमब्रुवन् प्रोक्तवन्तः, हे मघवन् देवराजेन्द्रः त्वमेतदुपस्थितं यक्षं विजानीहि, यत्किमेतद् यक्षमस्तीति, ततो मघवापि स्व-

सामर्थ्यमधिकं मन्यमानः सन् तथास्त्वित्युक्त्वा तद्यक्षं प्रति सोऽभ्यद्रवत्, यक्षाभिमुखे तत्समीपेऽगच्छत् । ततस्तदभिमान नाशनाय, यक्षं तेनेन्द्रेण सह सम्भाषणमप्यग्निवायुवदकृत्वा तस्मादिन्द्रात्तिरोदधे, तिरोहितमभूत् ॥११॥

अथ=वायु के अशक्ति प्रदर्शित करने पर, देवपति इन्द्र को बली जानकर, देव सब इन्द्रदेव को कहे कि हे मघवन्, आप, एतत्=इस यक्ष को विशेषरूप से समझो कि यह यक्ष कौन है, तब इन्द्र भी तथास्तु, वैसा ही हो, ऐसा कहकर "तदभिद्रवत" उस यक्ष के समीप में गये । तब उनके अभिमान को नष्ट करने के लिये उन के साथ, अग्निवायु के समान संभाषण=वार्ता भी नहीं करके यक्ष उस इन्द्र से तिरोहित हो गया ( छिप गया लुप्त हो गया ) ॥ ११ ॥

इन्द्रस्योक्तरीत्याऽनादरे जाते निवृत्ताऽभिमानः सन्नपि तदन्यदेवाद्यपेक्षयेन्द्रस्यविवेकित्वात्प्रजापत्तेश्च शिष्यत्वाद् धैर्यमवलम्ब्य जिज्ञासया स तस्मिन् प्राप्तदेशे यक्षं ध्यायन् तस्थावित्याद्याशयेन श्रुति र्भगवती प्राह—

इन्द्र के उक्तरीति से अनादर होने पर अभिमान की निवृत्ति से निराभिमान होता हुआ भी, अन्यदेवादि की अपेक्षा विवेकी तथा प्रजापति के शिष्य होने के कारण धैर्य धारण करके जिज्ञासा सहित, यक्ष के ध्यान करते हुए, उस प्राप्त देश में ही स्थिर रहे, निवृत्त नहीं हुए, इत्यादि आशय से श्रुति कहती है कि—

**स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम, बहुशोभमानामुमां हैमवतीम् । ताँ्होवाच किमेतद् यक्षमिति ॥१२॥**

इति केनोपनिषदतृतीयखण्डः समाप्तः ॥ ३ ॥

❀

स इन्द्रस्तस्मिन्नेवाऽऽकाशे=प्राप्ताऽऽकाशप्रदेशे तस्थौ। अग्नयादिवत्तस्मात्स्थानान्ननिववृते, तत इन्द्रस्य धैर्येण भक्तया च प्रसन्नान्तर्यामिनो यक्षस्य कृपाशक्तिस्वरूपा विद्याऽत्मिका स्त्री तस्मिन् यक्ष तिरोधानात्मक एवाकाशे प्रादुरभूत्, तां दृष्ट्वा स इन्द्रस्तामुमां महेश्वरपत्नीमिव वर्तमानां हैमवतीम्–हेम=सुवर्णकृताऽऽभूषणवतीम्, यद्वा हिमवतोऽपत्यभूतां पार्वतीमिव शोभमानामतिशोभायुक्तां स्त्रियमाजगाम, तस्याः सन्निधाविन्द्रोऽगमत्। ताञ्च ह प्रकटीभूतामिन्द्र उवाच=पप्रच्छ=यदेतद् यक्षं दृष्टवानस्मि तत् किमात्मकं वर्तते सर्वज्ञा त्वमभिमता तद् यक्षं मह्यं ब्रूहीति ॥१२॥

स = सो इन्द्र = जहां गये उसी आकाश प्रदेश में स्थिर रहे, अग्नि वायु के समान वहां से निवृत्त नहीं हुए = लौटे नहीं, तब इन्द्र के धैर्य और भक्ति प्रेम अन्तर्यामी यक्ष ब्रह्म की कृपा स्वरूप विद्यात्मक बहुत शोभायुक्त हैमवती= हिमावान् की पुत्री पारवती उमा तुल्य, या सुवर्णकृत भूषणवती तुल्य स्त्री उस यक्ष के अन्तर्धानरूप आकाश प्रदेश में प्रगट हुई, फिर इन्द्र उस स्त्री के समीप में "आजगाम" प्रेमपूर्वक गये, और "ताँ हो वाच" उस प्रकट स्त्री के प्रति बोले, उससे पूछा कि—"किमेतद यक्षमिति" जिस को मैं देखा हूँ, यह कौन है, तुम सर्वज्ञा हो, उसयक्ष के स्वरूप को मुझसे कहो ॥ १२ ॥

●

# अथ केनोपनिषद्

## चतुर्थ खण्डः

**सा ब्रह्मेति होवाच, ब्रह्मणो वा एतद्विजये महीयध्वमिति । ततो हैव विदाञ्चकार ब्रह्मेति ॥१॥**

सा=इन्द्रेण पृष्टाऽतिशोभमाना विद्याऽधिदैवभूतास्त्रीह=किल, सत्यवचनामिदं प्रत्युवाच=कथितवती, यत्त्वया पृष्टं यक्षं तत् सत्यं सर्वज्ञं ब्रह्मास्ति, तस्य वै ब्रह्मणो विजयेऽसुराणामेतत्पराभवे । एतदितिक्रियाविशेषणार्थमिति । ततो ब्रह्मणा एतद्विजये सति यूयं देवा महीयध्वम्, महत्त्वं तन्निमित्तकं लभध्वम् । स्वतन्त्र स्वकीय विजयाऽभिमानं त्यजथ, इति=उक्तरीत्या स्त्रिया कथिते सति, ततो ह एव, तद्वचनादेवेन्द्रो यक्षं ब्रह्मेति विदाञ्चकार, न स्वातन्त्र्येण ब्रह्म ज्ञातुमशकत् । यदा देवराजेन्द्रेणापि ध्यानादिकं विना सत्यं ब्रह्म नावगतमभूत । तदाऽन्यैः कथं ध्यानादिकं विनाऽवगतं भविष्यति=इति तदर्थमवश्यं ध्यानविचारादिकं कर्तव्यमस्तीत्यभिप्रायोऽत्र वर्तते ॥१॥

सा उमानामिका हैमवती स्त्री इन्द्र के प्रति निश्चित सत्यार्थ ही, उवाच, बोली (कही) कि, जिसको आपने देखा था, वह सत्य ब्रह्म था । और आप देवों का जो असुरों के साथ संग्राम हुआ था, उसमें ब्रह्म ही असुरों का पराभव किया था । अतः यह विजय वस्तुतः ब्रह्म का ही हुआ है, आप सब इस ब्रह्म के विजय होने पर, उस विजय में ही "महीयध्वम्" महत्त्व महिमा का लाभ ( प्राप्त )

करो, स्वतन्त्र अपने विजय के अभिमान को त्याग दो तो 'ह एव, उक्तरीति से उमा के कहने ही पर, इन्द्र उसके वचन से ही "ब्रह्मेति विदाञ्चकार" वह यक्ष ब्रह्म था इस प्रकार समझ=जान पाये, स्वतन्त्र नहीं।

जब इन्द्रादि देव भी ध्यानविचारादि के बिना सगुण ब्रह्म को भी स्वतन्त्र नहीं समझ पाते हैं, तो अन्य कोई ध्यानादि के बिना कैसे समझेगा, अतः ब्रह्मात्म ज्ञान के लिये गुरु शरण में जाकर श्रवण विचारादि अवश्य कर्तव्य है, यह श्रुति का तात्पर्य है ॥ १ ॥

यस्मादग्निवाय्विन्द्रा देवा ब्रह्मणः सम्वाददर्शादिना ब्रह्मणः सामीप्यं-गतवन्तस्तस्मात्तेषामन्यदेवादिभ्यः श्रैष्ठ्यमाह श्रुतिः—

जिससे अग्नि वायु और इन्द्रदेव ब्रह्म के साथ सम्बाद ब्रह्म के दर्शनादि से ब्रह्म की समीपता को प्राप्त किये। अतः इनमें अन्य देवों से श्रेष्ठता है, इस अर्थ को श्रुति कहती है कि—

**तस्माद्वा एते देवा अतितरामिवाऽन्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥२॥**

तस्माद्वै=उक्तब्रह्मणा सह सम्बादादित एव, एते=अग्निवायवादि-देवा अन्यदेवान् वरुणादीन्, अतितरामिव,ताननतिक्रम्य तेभ्योऽतिश्रेष्ठ-त्वेन वर्तमाना इव वर्तन्ते जनैश्च तथा दृश्यन्ते। ते हि यतोऽग्निवायुरिन्द्रश्च= एतद् यक्षं ब्रह्म नेदिष्ठिम्—अतिसन्निधौ गतमन्तिकस्थंमन्तिकतमं प्रियतमं पस्पृशुः स्पृष्टवन्तो वचन दर्शनादिना (नेत्रादिना) इति। ते च हि यस्मादेनत् प्रथमो ब्रह्मेति विदाञ्चकार प्रथमः प्रथमाः प्रधानाः सन्तो विदाञ्चक्रुः। प्रथमं वा विदाञ्चक्रुस्तस्मात्तेऽन्येभ्यो देवेभ्यः श्रेष्ठतमा बभूवुरिति ॥२॥

तस्माद्वै=पूर्ववर्णित ब्रह्म के साथ सम्वादादि से ही एते, ये अग्नि वायु और इन्द्र नामक तीन देव, अन्य वरुणादि देवों को अतितरामिव, अतिक्रमण

करके मानो रहते हैं। वरुणादि से अति श्रेष्ठ के समान वर्ताव=व्यवहार करते हैं, और लोक से भी वैसा ही माने जाते है, ते हि, जिससे वे अग्नि आदि देव, नेदिष्टं, अत्यन्त निकट=समीप में स्थिर "एनत्" इस ब्रह्म को बनच दर्शनादि=नेत्रादि द्वारा "पस्पृशुः" स्पर्शकिये, और यतः ते=वे अग्नि आदि, अन्य की अपेक्षा प्रथमो, प्रथमं, पहलें, (विदाञ्चकार=विदाञ्चक्रुः) समझ सके कि यक्ष=पूज्य ब्रह्म है। अथवा प्रथमो=प्रथमाः=प्रधानाः सन्तः, सर्वदेवसे प्रधान होते, ब्रह्म को भी समझे। अतः अन्यदेव से अतिश्रेष्ठ हुए॥ २॥

यस्मादग्निवायू अपीन्द्रवचनादेव यक्षं ब्रह्म विज्ञातवन्तौ, इन्द्रस्तु प्रथमेव=उमावच्छोभमानास्त्रीवाक्याद् यक्षं ब्रह्म प्रज्ञातवान्, तस्मादिन्द्रस्याग्निवायुभ्यामपि प्रधान्यं श्रुतिराह—

अग्नि और वायु देव भी इन्द्रदेव के बचन से ही यक्ष को ब्रह्म समझ सके स्वयं नहीं, और इन्द्रने तो प्रथम ही उमातुल्य स्त्री के वचन से ब्रह्म को समझा, अतः इन्द्र की अग्निवायु से भी प्रधानता को श्रुति कहती है कि—

**तस्माद्वा इन्द्रोऽतितरामिवाऽन्यान् देवान् सह्येनन्नेदिष्ठं पस्पृशुस्ते स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥३॥**

तस्मात् प्रथमज्ञानादेवाऽन्यान् देवान्-अग्निवायुसहितान् प्रति गुरुत्वं प्राप्तवानिवेन्द्रोऽतितरामिवाऽन्यान् (देवान्) प्रत्यशेरते इवातिश्रेष्ठ इवाऽतिपूज्य इव स तानतिक्रम्य वर्तते। हि यतः स इन्द्र एनद् यक्षं नेदिष्ठमत्यन्तिकस्थं पस्पर्श प्रज्ञातवान् स्त्रीवाक्यात्। हि यस्माच्च प्रथमः पूर्वमेव प्रधानः सन् देवपतिः सन् पुनरपि प्रथमं यक्षं ब्रह्मेति स्त्रीदेवी वक्याद्विदाञ्चकार ततोऽतिपूज्योऽभवत् ॥३॥

तस्माद्वै, उक्तसर्वापेक्षा प्रथम ज्ञान से ही, इन्द्रदेव, अन्यदेवे के प्रति "अतितरामिव" अतिश्रेष्ठ गुरुत्व प्राप्त के समान रहते हैं। अग्निवायुसहित

सब देवको अतिक्रमण करके सर्वोपरि वर्तते हैं। क्यों किस=वह इन्द्र अति-निकटस्थ इस पूज्य ब्रह्म का स्पर्श किया। और प्रथम=देवराज=प्रधान होते, प्रथम ही यक्ष को ब्रह्म समझा, स्त्री वचन से प्रथम समझने से, श्रद्धाभक्ति आदि युक्त अति पूज्य हो गये॥ ३॥

उक्त ब्रह्मणोऽधिदैवोपासनप्रकारं श्रुतिराह—

उक्त पूज्यब्रह्म के अधिदैव उपासना की रीति को श्रुति कहती है कि—

**तस्यैष आदेशो यदेतद्विद्युतो व्यद्यु तदा इतीन्नयमीमिषदा इत्यधिदैवतम् ॥४॥**

तस्य यक्षात्मकस्य ब्रह्मण एष वक्ष्यमाणा आदेश उपमयोपदेशो वर्तते, निरूमस्यापि ब्रह्मणो येनोपमानेनोपदेशः सम्भवति, सोऽयमादेश सम्भवति, सोऽयमादेश उपदेशोऽग्रे कथ्यते श्रुत्येति। किं तदुपमानमिति चेत्कथ्यते, यदेतत् प्रसिद्धं लोके विद्युतो व्यद्युतद् व्युद्योतनं प्रकाशनं तद्वद्ब्रह्मणो विभोर्नित्यस्य क्षणिकं प्रकाशनमनुपन्नमपि, ब्रह्मण इन्द्राग्रे व्यद्युतदा=अत्राऽऽकार इवार्थकः, व्यद्युतद विद्योतनार्थकः, तथा च ब्रह्मे-न्द्राग्रे विद्युदिव विद्योतनं कृतवत्। तद्वदेव च तिरोहितभूत्ततस्तथैवो-पास्यमभूदिति। अन्यच्चोपासनं वर्तत इत्याह श्रुतिः। इत् न्यमीमिषदा ३ इति। अत्र इत् शब्दः पूर्वणोपमानेन समुच्चयार्थकः आ इवार्थकः, णिच् प्रत्ययः स्वार्थे वर्तते, तथा च यथा विद्युतो व्युद्योतनेन चक्षु र्न्यमी-मिषद्=निमेषं कुरुते, तद्वदेव ब्रह्मणः प्रकाशेन निमेषं कृतवन्तो देवा ब्रह्म च तेषां नेत्रेषु निमेषं कृतवदिव, ततश्चक्षुषः स्वविषयं प्रकाशस्य तिरोभाव इवाऽभूदिति चाधि दैवतं ब्रह्मण उपासनार्थमुपमानदर्शनं वर्तते इति॥४॥

तस्य=उक्त पूज्य ब्रह्म का, एष, वह आगे वर्णित, आदेश=उपमाद्वारा उपदेस है, अर्थात् उपमारहित ब्रह्म का भी जिस उपमा से उपदेश हो सकता है, सो उपमारूप आदेश=उपदेश आगे कहा जाता है। वह उपमा=उपमान क्या

है, सो कहा जाता है कि जो यह लोक में प्रसिद्ध विद्युत का, व्यद्युतद, विद्योतन=प्रकाशन=चमक होता है, उसके समान ही विभुनित्य प्रकाशस्वरूप ब्रह्म का अनुपपन्न=अयुक्त भी क्षणिक प्रकाशन इन्द्रके आगे व्यद्युतदा, विद्योतन के समान हुआ। अर्थात् इन्द्रके आगे=सामने ब्रह्म ने विद्युत के समान विद्योतन=प्रकाश किया, और विद्युत के समान ही तिरोहित हो गया। अतः विद्युत तुल्यही उपास्य ध्येय=चिन्तनीय ब्रह्म हुआ। अन्य भी उपासना है, सो श्रुति कहती है "इत् न्यमीमिषदा ३ इति" जैसे विद्युत के विद्योतन से नेत्र = "न्यमीमिषद्" निमेष = पलकबन्द, करता है, तैसे ही ब्रह्म के प्रकाश से देव सब निमेष किये, आँखमुंद लिये और ब्रह्म हो मानो उनके नेत्रों में निमेष किया = कराया कि जिससे नेत्र के स्वविषयप्रकाश का तिरोभाव सा हो गया, यह भी ब्रह्म के उपासनार्थक अधिदैवत उपमान प्रदज्ञान है॥ ४॥

चक्षुषः प्रकाशस्याभिभावकं विद्युत्प्रकाशमिव देवनेत्र प्रकाशाभिभावकं तेषां नेत्रेषु निमेषकारकं क्षणमात्रमभिव्यक्तं ब्रह्म देवोपास्यमुक्त्वाऽधुना प्रत्यगात्मत्वेन व्यक्त ब्रह्मण उपासनप्रकारं श्रुतिराह—

चक्षु के प्रकाश को अभिभव करने वाला विद्युत प्रकाश के समान, देव नेत्र के प्रकाश को अभिभवकरसेवाला, देवनेत्रों में निमेष करनेवाला क्षणमात्र अभिव्यक्त ब्रह्म, देव के उपास्य चिन्तनीय है। इस अर्थ को प्रथम कह कर, अब सब के प्रत्यगात्मा = अन्तरात्मा रूप से व्यक्त ब्रह्म की उपासना की रीति को श्रुति कहती है कि—

**अथाऽध्यात्मं यदेतद् गच्छतीव च मनोऽनेन**
**चैतदुपस्मरत्यभीक्ष्णं संकल्प ॥५॥**

अथ=अधिदैवतोपसनानन्तरम्—अध्यात्म=प्रत्यगाऽऽत्मदिषय आदेश उपमोपदेशः कथ्यते। इत्याह श्रुतिः। मिमुपमानं तदाह—यदेतदस्माकं जनानां

मन उक्तलक्षनां ब्रह्म प्रति गच्छतीव प्रप्नोतीव ब्रह्मविषयी करोतीव, वस्तुतो ब्रह्मणोऽविषयत्वान्नमनो विषयी करोतिति चिन्तयेत्, यतो येनाऽऽ-हुर्मनोमतप्युिक्तम् । गच्छतीव न तु गच्छति मनसोऽपि मनस्त्वादात्मभूत-त्वाद् ब्रह्मणाः यद्=यस्माच्चानेन मनसा एतद ब्रह्म=उपस्मरति कश्चिद् विद्वान=समीपतः स्वाऽऽत्मत्वेन स्मरति कश्चित्साधकोऽहं ब्रह्माऽस्मीत्यादि । तस्मात्तद्गच्छतीवेत्युच्यते । किञ्चाऽभीक्ष्णं पुनः पुनः संकल्पः संस्मरणा-दिकः साधकस्याऽनेनः मनसैव भवति । मन उपाधिकस्य च ब्रह्मणः संकल्पा-दिकः सम्भवति न निरूपाधिकस्य, अतः सोपाधिकस्यैव आदेशस्तथैव मन्द-बुद्धिभि र्ब्रह्मोपास्यमिति ॥५॥

अथ—उक्त अधिदैवत उपासन के अनन्तर = अध्यात्म = अन्तरात्म विषयक उपासना कही जाती है, उपासना के आदेश = उपदेश है, कि किस उपमा वाला अध्यात्म उपासना है, सो दर्शाया जाता है कि, त्यदेतत, जो यह हम सबके मन है, सो सदा मानो उक्तलक्षण वाले ब्रह्म के प्रति सुषुप्ति में गच्छति, जाता है, ब्रह्म को प्राप्त करता है, ब्रह्मस्वरूप आनन्द का कभी अनुभव करता है, परन्तु ब्रह्म स्वयं प्रकाश है, मन का भी विषय नहीं है। क्यों कि प्रथम कहा गया है कि "येनाहुर्मनोमतम्" जिस ब्रह्म से मन = मत ज्ञात होता है, ऐसे गुरुआचार्य कहते हैं, अतः ब्रह्म के प्रति मन जाते हुए के समान प्रतीत है, परन्तु नहीं जाता है, ऐसा ही समझना चाहिये, क्यों कि मन का भी मन = आत्मा ब्रह्म को कहा गया है। और 'यद, जिससे 'अनेन, इस मन से ही कोई ज्ञानी ब्रह्म के मानो निकट जाकर ब्रह्म का स्मरण ध्यान करता है, कोई साधक = उपासक स्मरण करता है, अतः मन मानो जाता है, यह कहा जाता है। और अभीक्ष्णं पुनः पुनः = बारम्बार 'अनेन, इस मन से ही संकल्पादि होते हैं, मन उपाधिसहित ब्रह्मात्मा में संकल्पादि हो सकते हैं, निरूपाधिक में नहीं। अतः उपासना के लिये सोपाधिक का उपदेश है, कि ब्रह्म भी मानो सर्वत्र गन्ता संकल्पादि कर्ता है. सर्वात्मा होने से सर्वत्र प्राप्त है, इत्यादि ॥ ५ ॥

उक्तस्य ब्रह्मणःउपासने गुणफले अभिधीयेते—

उक्त ब्रह्म की उपासना में गुण फल कहे जाते हैं कि—

**तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाऽभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥६॥**

तत् प्रत्यगात्मस्वरूपं ब्रह्म, ह=खलु, तद्वनं नाम, तत्=तस्य प्राणिजातस्य वनं=वननीयं संभजनीयं वर्तते प्रत्यगात्मभूतत्वात्। ततस्तद्वनं नाम=प्रख्यातं ब्रह्मेति। यतश्च तद्वननाम्ना प्रसिद्धमतस्तद्वनमिति नाम्नैव गुणाभिधानेन=गुणनिमित्तक नाम्ना ब्रह्मोपासितव्यं चिन्तनीयमस्ति। उपासकस्य फलमाह=स उपासको यः कश्चिदेतत्=मनःसंकल्पादिनिमित्तं ब्रह्म, एवं वेद=उक्त गुणनामकमुक्तरीत्योपास्ते चिन्तयति, एनमुपासकं, ह खलु, सर्वाणि भूतानि=अभि सं वाञ्छन्ति। ब्रह्मेव स सर्वभूतप्रियः सर्व प्रर्थनाविषयो भवतीति ॥६॥

तत्=वह अन्तरात्मा स्वरूप ब्रह्म ही, 'तद्वनं नाम, ( वनसनसंभक्तौ ) सबके अन्तरात्मा होने से सबके भजन चिन्तन ध्यान के योग्य प्रसिद्ध है अतः, 'तद्वनं' वह ब्रह्म ( वनं ) भजनीय=भजन योग्य है। इस प्रकार से नाम गुण के चिन्तन पूर्वक ( उपासितव्य ) उपासनीय=उपासना के योग्य उपास्य ध्येय है। 'यः' जो कोई, 'सः' उपासक 'एतद्, मन के संकल्पादि के निमित्त=कारण स्वरूप इस ब्रह्म को 'एवं वेद' उक्त नाम गुण युक्त को उक्त रीति से उपासना चिन्तन करता है। 'एनं' इस उपासक को सब प्राणी "अभिवाञ्छन्ति" सर्वथा प्राप्त करना चाहते हैं, अर्थात् वह उपासक ब्रह्मात्मा के समान सबका प्रिय प्रार्थनीय हो जाता है। आत्म तुल्य हो जाता है। अतः यह उपासना कर्त्तव्य है इत्यादि ॥ ६ ॥

पूर्वोक्त विद्या स साधनासफला चोक्तस्वरूपैवाऽस्ति, यद्वा तस्याः फलोपकारकं किञ्चित्साधनमन्यदपि वर्तते। यद्यस्ति किञ्चिद्रहस्य साधनं तच्छिष्येनाऽपृष्टमपि दयालुना गुरुणा वक्तव्यमस्तीत्यभिप्रायेण शिष्य आह—

साधन फल सहित वर्णित विद्या, वर्णित मन्त्र ही है, या उस के फल के उपकारक कोई साधनान्तर भी है, यदि कोइ रहस्य साधनान्तर हो, तो वह शिष्य के नहीं पूछने पर भी दयालु गुरु को कहना ही चाहिये, इस आशय से शिष्य कहता है कि—

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद् ब्राह्मी वाव त उपनिषदमब्रूमेति ॥७॥**

भो सद्गुरो ! उपनिषदं=रहस्यं चिन्तनीयं संभजनीयमुक्तनामवद् यद्यन्यदपि किञ्चिद् विद्यते, विद्यायाः साधनान्तरं सर्वशिष्यैरवश्यमनुष्ठेयं वर्तते तत्सर्वं ब्रूहि कथय, इत्येवं शिष्येण पृष्टो गुरुराह—उक्ता साधनान्तर सहायकान्तरनिरपेक्षा या विद्या मोक्षसाधिका भवति, सा उपनिषदात्मिका विद्या ते=तव मयोक्ता-कथिता श्रोत्रस्य श्रोत्रमित्यादिना। एषा विद्या ब्राह्मी ब्रह्म सम्बन्धिनी वर्ततेऽतो ब्रह्मात्म विषयामविद्या शातयित्वा ब्रह्मगमयतीत्युपनिषत् कथ्यते, तां ब्राह्मीं विद्यामुपनिषदं वाव ते तुभ्यमब्रूम ऊक्तवन्तो वयम्। इत्युपसंहारो विद्याया इह वर्तते ॥७॥

भो–हे सद्गुरो ! उपनिषद्=रहस्य=चिन्तनीय, यदि अन्य भी कोई विद्या का साधन=शिष्य का कर्तव्य है, तो वह भी 'ब्रूहि' कहो। ऐसा पूछने पर गुरुजी ने कहा कि, उक्त साधनों से साधनान्तर की अपेक्षा रहित उपनिषद्=रहस्य स्वरूप, ब्राह्मी = ब्रह्मबोधक विद्या "त्वं मया उक्ता" मुझसे तुझे कही गई है, कि "श्रोत्रस्य श्रोत्रम्" इत्यादि ॥ अतः 'उपनिषदं ते वाव' उपनिषद्विद्या तुम्हारे लिये हम = अब्रूम, कह चुके हैं, अब वक्तव्य नहीं है, इति ॥ ७ ॥

विद्यायाः फलोपकारकं साधनान्तरं न विद्यते किन्तु विद्यायाः स्वरूपसाधकं साधनं तप आदिकं विद्यते-इत्याद्याशयेनाऽऽह—

विद्या के फल में उपकारक साधनानन्तर नहीं है, किन्तु विद्या के स्वरूप के साधक = कारण तप आदिक हैं, इस आशय से श्रुति कहती है कि—

**तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् ॥ ८ ॥**

तस्यै=उक्ताया ब्राह्मीविद्यायाः स्वरूपसिद्धयै तप आदिसाधनानि भवन्तिः। तत्र तपः कायेन्द्रियमनसां संयमात्मकं ब्रह्मचर्याऽहिंसादिस्वरूपं-ज्ञेयम्। दमोमन इन्द्रियदमनात्मकं भवति। कर्म=श्रौत स्मार्तात्मकमग्निहोत्र-दानादिलक्षणं भवति। इति=अन्यदपि स्वाध्याय जपादिलक्षणं कर्म विद्यते तथाऽमानित्वाऽदम्भित्वादिलक्षणं साधनं विद्यते, एतानि विद्यास्वरूपसिद्धयै-साधनानि भवन्ति। भ्रमसंशयादिनिवारणादि द्वारा प्रतिष्ठाः=पादावि-व विद्यायाश्चिरनिश्चितस्थितिसाधनानि च भवन्ति। एवं सर्वेवेदाः सर्वाङ्गानि-च विद्ययाः स्वरूपसाधकानि प्रतिष्ठात्मकानि च मवन्ति। वेदादिज्ञानसाध-नानां श्रवणमननादितः सर्वा विद्याः संजाताः सन्तिष्ठन्तीति भावः। सत्यं सत्यभाषणं वाङ्मनः कायेषुचाऽकौटिल्यममायित्वं विद्याया आयतनं निवास-स्थानं विद्यते। सत्येसति हि विद्या वर्तते "न येषुजिह्ममनृतं न माया च, प्रश्नो प० १।१६॥ यत्र कपट मिथ्याभाषण मायायाअभावो वर्तते तत्र विद्या तिष्ठतीति।

"सत्येन लभ्यस्तपसाऽ ह्येष आत्मा सम्यग् ज्ञानेन वह्मचर्येण नित्यम्। अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः॥ १॥ सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः। येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम्॥२॥ मुण्डको० ३।१।५-६॥८॥

तस्यै=उक्त ब्रह्म विद्या के स्वरूप सिद्धि ( उत्पत्ति प्राप्ति ) के लिये तप, दम कर्म 'इति' साधन होते हैं, और विद्या की स्थिति के लिये पाद=चरण के समान प्रसिष्ठा होते हैं, उत्पन्न विद्या तपादि से रक्षित रहती है, तहाँ शरीरेन्द्रियमन के संयम=वशीकरण ब्रह्मचर्य अंहिसादि तप कहे जाते है, मन इन्द्रियों का बल से दमन=कुमार्ग कुवस्तु कुभक्ष्य कुसङ्ग से निरोध

दम कहा जाता है। श्रौतस्मार्तस्वरूप अग्निहोत्र दानयज्ञादि कर्म होते हैं, स्वाध्याय=अध्ययन अध्यापन जपादि भी कर्म होते हैं, अमानित्वाऽदम्भित्वादि भी ज्ञान के साधन प्रसिद्ध हैं। इसी प्रकार सब वेद और वेद के व्याकरणादि सब अङ्ग भी विद्या के साधन और प्रतिष्ठा स्वरूप होते हैं, क्यों कि ज्ञान के साधन वेदादि के श्रवणादि से विद्या उत्पन्न होती है और स्थिर रहती है। 'सत्यं=सत्य भाषणं=मन वचन शरीर में कुटिलता=कपट का त्याग 'अमायिकता' विद्या का आयतन=निवास स्थान है। सत्य के रहने पर विद्या वर्तमान रहती है। 'न येषु जिह्ममनृतं न माया च। प्रश्नोप० १।१६' जिनमें जिह्म=कपट, मिथ्या–भाषण और माया का अभाव रहता है। उनमें विद्या रहती है॥

"सत्येनलभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम्। अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः॥१॥

सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः। येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम्॥२॥ मुण्डक ३।१।५–६॥"

नित्य=सत्यभाषण=मिथ्या भाषण के त्याग से "मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः" मन इन्द्रियों के एकाग्रता रूप नित्य तप से, सम्यक् संशयादि रहित नित्य ज्ञान से नित्य ब्रह्मचर्य से यह आत्मा लभ्य ज्ञातव्य=प्राप्त करने योग्य है। सो आत्मा शरीर के अन्दर हृदयाकाश में शुभ्र=शुद्ध ज्योतिर्मय=व्यक्त प्रकाश स्वरूप रहता है कि जिसको कामादि दोष रहित, यतन शील यति अनुभव करते हैं॥१॥ सत्य का=सत्यभाषी का विजय होता है, अनृत का नहीं= अनृत भाषी का नहीं, सत्य से ही देवयान पथ=मार्ग वितत=विस्तीर्ण रूप से सदा वर्तमान है, कि 'येन' जिस मार्ग से आप्तकाम ऋषि=तृष्णा रहित विद्वान् वहाँ आक्रमण=गमन करते हैं, कि जहाँ सत्य का वह परम श्रेष्ठ निधान=निधि है॥२॥

**यो वा एतामेवं वेदाऽपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ९ ॥**

इति केनोपनिषच्चतुर्थं खण्डः समाप्तः

इति केनोपनिषद् समाप्ता

यः साधको जिज्ञासु वै निश्चताम्-एतां पूर्वोक्तामायतन प्रतिष्ठासहितां "ब्रह्म ह देवेभ्यः" इत्यादिना स्तुतां विद्यां वेदः उपासीत प्राप्नुयात्' स पाप्मानम् अविद्याकामादिलक्षणं पापपुण्यात्मकं सर्वं जन्मादिप्रदं दोषमपहत्य विनाश्य अनन्ते त्रिविधभेदरहितेऽविनाशिनि स्वर्गे=सुखात्मके, लोके प्रकाशात्मके स्वरूपे ब्रह्मणि, ज्येये=ज्यायसि सर्वमहत्तरे पारमार्थिके स्वस्वरूप एव प्रतितिष्ठति जीवन्मुक्तः सन् विदेहमुक्तो भवति "अमृतत्वं हि विन्दते" इति सफलोक्तविद्याया इहोपसंहारो वेदितव्यः। पदाऽभ्यास उपनिषत्समाप्ति बोधकः ॥ ९ ॥

जो कोई साधक जिज्ञासु इस पूर्ववर्णित निश्चित आयतन प्रतिष्ठा सहित "ब्रह्म ह" इत्यादि से प्रसंसित विद्या को 'वेद' जानेगा, विद्या द्वारा निर्गुण सगुण ब्रह्म की अनुभूति उपासना करेगा, विद्या को उक्त साधनों से प्राप्न करेगा, सो साधक जिज्ञासु, अविद्या कामादि जन्य जन्मादि के कारण स्वरूप पापों का अपहत्य = नष्ट करके, अनन्त = त्रिविध भेद रहित अविनाशी, स्वर्ग सुखस्वरूप = ज्येये = प्राप्य सर्वश्रेष्ठ महान् विभु लोक = ज्योतिः स्वरूप ब्रह्मात्मा में प्रतिष्ठित = स्थिर = जीवन्मुक्त होता हुआ विदेह मुक्त होता है, पुनरावृत्ति रहित नित्य निश्चलमुक्तस्वरूप होता है। अन्तिमपाद की आवृत्ति उपनिषद् की समाप्ति का बोधक है ॥९॥

**ब्रह्मविद्भवति ब्रह्म सुखं शान्ति च विन्दते ।**
**लभते चामृतत्वं स कृत्वो पासनमादितः ॥ १ ॥**

स्वधर्मोपासनं नित्यं गुरोश्चोपासनं तथा ।
ब्रह्मज्ञोपासनं चोक्तं ब्रह्मोपासनया कृतम् ॥ २ ॥

धुनोति सर्वपापादीन् कामादीनां क्षयं यदा ।
कृत्वा दर्शयते ब्रह्म ह्युपासनं महोदयम् ॥ ३ ॥

इति ब्रह्मविद्वरिष्ठ श्रीस्वामिहनुमद्दास षट्शास्त्रि
विरचिता केनोपनिषद्स्य संस्कृत
व्याख्या समाप्ता ।

ब्रह्म ज्ञानी ब्रह्म होता है, सुख और शान्ति पाता है, प्रथम उपासना करके ब्रह्म ज्ञान से वह अमृतत्व मोक्ष पाता है ॥१॥ सदा निज धर्म की उपासना, तथा गुरु की उपासना और ब्रह्मज्ञ की उपासना भी उक्त ब्रह्मोपासना के साथ की हुई, सब पापादि को नष्ट करती है, कामादि को नष्ट करके ब्रह्म दर्शन कराती हैं। अतः ब्रह्म की उपासना महान् उद्यमका हेतु है ॥३॥

ब्रह्मविद्वरिष्ठ श्री स्वामी हनुमानदासजी साहब
षट्शास्त्री विरचित केनोपनिषद् की
हिन्दी टीका समाप्त हुई ॥



# शुद्धिपत्र

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| ओर | और | ५ | १० |
| प्रसाद | प्रसार | ५ | १५ |
| हनुमान् | हनुमत् | ५ | २२ |
| जायमी | जायगी | ६ | २ |
| नाहित्य | साहित्य | ६ | १० |
| अतनी | अपनी | ६ | २३ |
| निराकार मस्त्व | निराकरणमस्त्व | ८ | ३ |
| सर्वाण्याप्यन्तु | सर्वाण्याप्यायन्तु | ८ | ९ |
| वभाव | अभाव | ८ | २४ |
| नवमाऽभ्या | नवमाऽब्या | ८ | ३० |
| व्रहम | ब्रह्म | १० | ९ |
| व्रहम | ब्रह्म | १० | ११ |
| द्युपघ्राम्य | द्युपक्रम्य | ११ | ११ |
| इत्यादिप्ते | इत्यादिसे | ११ | १० |
| अनुमार | अनुसार | ११ | १८ |
| प्राणाश्च | प्राणश्च | १३ | १० |
| श्चक्षुर | चक्षुषश्चक्षुर | १३ | १० |
| ऽऽत्मानंत्मानं | ऽऽत्मानं | १३ | २८ |
| ऽमात्प्र | ऽस्मात्प्र | १३ | २९ |
| भुञ्जीथा | भुञ्जीथा | १४ | २ |
| वहिन | वहिन | १५ | १२ |
| विजानीमौ | विजानीमो | १७ | १६ |
| वमक्त | व्यक्त | १७ | २५ |
| जा | जो | १८ | ३ |
| स्यान्त | स्यात्त | १८ | ९ |
| यन्मकसा | यन्मनसा | १९ | ११ |
| वणित | वर्णित | २० | १२ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| गृहणाति | गृह्णाति | २१ | २६ |
| यतरद | यतस्तद | २२ | १ |
| खण्ड | खण्ड: | २३ | २ |
| ब्रहमास्ति | ब्रह्मास्ति | २४ | १२ |
| ब्रहम | ब्रह्म | २४ | १३ |
| शिष्य | शिष्य | २५ | ८ |
| विरोघो | विरोधो | २५ | १७ |
| ब्रहम | ब्रह्म | २५ | २८ |
| पूवोक्त | पूर्वोक्त | २६ | १० |
| यद्यप | यद्यपि | २८ | ३ |
| ब्रहम | ब्रह्म | ३१ | २२ |
| ब्रहमणो | ब्रह्मणो | ३२ | २ |
| ब्रहम | ब्रह्म | ३२ | २२ |
| किनामसि | किंनामसि | ३५ | १ |
| अत्र वक्तवन्त: | अत्र वनुक्तवन्त: | ३६ | १० |
| एत | एतत् | ४० | ५ |
| यया | गया | २० | ६ |
| त्तस्मात् | तस्मात् | ४१ | २ |
| लिथे | लिये | ४३ | ६ |
| ह्य नन्नेष्ठिं | ह्य नन्नेदिष्ठं | ४३ | १३ |
| अग्रि | अग्नि | ४४ | १३ |
| दिषय | विषय | ४६ | २२ |
| हर्मनोमतप्यिुक्तम् | हुर्मनोमतमित्युक्तम् | ४७ | ३ |

सूचना—यद्यपि मुद्रण यन्त्र बाहुल्य होने पर भी मुद्रण कार्य शोभन नहीं है। मुद्रणकर्ता की असावधानी तथा अक्षर संयोजक की असावधानी से इस ग्रन्थ में गलतियों एवं अनुट्ठे रह जाना स्वाभाविक है। अत: पाठकगण कृपया सुधार कर पढ़ें।

———

परपूज्यपादश्रीस्वामीहनुमानदासजी साहब षट्शास्त्री

कृत तथा अनुवादित

# ग्रन्थों की नामवली

## (१) अनुवादित

१. बीजकभाष्य शिशुबोधिनीव्याख्या
२. बीजक की श्लोकबद्ध संस्कृतव्याख्या
३. बीजक की संस्कृत हिन्दी व्याख्या
४. बीजक की सार बोधिनी टीका
५. बीजक की धन्नौती पाठपर हिन्दी-स्वानुभूतिव्याख्या,
६. सटीक साखी ग्रन्थ
७. शब्दामृतसिन्धु की विरल टीका
८. तीसा यन्त्र की टीका
९. तत्त्वार्थमणिमाला सटीक
१०. कबीर परिचय की टीका
११. कबीर कौशलसार सटीक
१२. संशय खण्डन की टीका
१३. विचार सागर की टीका टिप्पण
१४. अनन्त परिचय और अनन्त सागर पर टिप्पण
१५. मनोबोधपर टिप्पण
१६. ब्रह्मसूत्र की हिन्दी टीका
१७. ब्रह्मसूत्र शांकर भाष्य की हिन्दी टीका
१८. खण्डनखण्डखाद्य की हिन्दी टीका
१९. श्रीमद्भगवद्गीता की संस्कृत टीका
२०. श्रीमद्भगवद्गीता की हिन्दी टीका
२१. ईशावास्योपनिषद की संस्कृत हिन्दी टीका
२२. केनोपनिषद की संस्कृत हिन्दी टीका
२३. विचारचन्दोदय
२४. चित्सुखी, यंत्रस्थ

## (मौलीक)

१. अध्यात्मतत्त्वसम्बाद सटीक
२. अध्यात्मतत्त्वसम्बाद मूल
३. तत्त्वार्थ दोहावली
४. तत्त्वार्थमणिमञ्जूषा सटीक
५. तत्त्वार्थमणिमञ्जूषामूला
६. भक्तचारितामृत
७. लघुधर्म चन्द्रिका
८. सद्धर्म चन्द्रिका
९. कबीर सन्देश
१०. दिव्य नामावली
११. भक्ति-भक्तभगवन्त स्तुति
१२. बीजक सार संग्रह